# श्रीहनूमत्संस्तवः

(भुजङ्गप्रयातम्)

नमाम्यञ्जनीनन्दनं वायुपुत्रं
नमामि प्रभुं वानराणां गणानाम् ।
सदा रामनामामृतं सेवमानं
नमामि प्रभुं मारुतिं रामदूतम् ॥ १॥

तडित्तेजसं वायुवेगं बलिष्ठं
चिरञ्जीविनं दिव्यवज्राङ्गदेहम् ।
दितेः सन्ततिं संहरन्तं कपीन्द्रं
वरेण्यं शरण्यं नितान्तं भजेऽहम् ॥ २॥

महासागरं लीलया लङ्घयित्वा
त्वयाऽऽश्वासिता भूमिकन्या सशोका
त्वया राक्षसेन्द्रस्य लङ्का विदग्धा
त्वयैतादृशी स्वामिसेवा विधत्ता ॥ ३॥

त्वदीयेन वेगेन तुल्यो न वायु-
र्न वा मानसं मानवानां कपीश ।
सुमित्रासुतप्राणरक्षार्थमेव
गिरीन्द्राग्रमुत्पाट्य वेगेन नीतम् ॥ ४॥

वरिष्ठा वदान्याऽस्ति सेवा त्वदीया
प्रभू रामचन्द्रस्त्वयैव प्रसन्नः ।
त्वमेवासि चादर्शभूतो नराणां
भवत्पादपद्मं सदा वन्दनीयम् ॥ ५॥

त्वमेवाग्रणीधीर्वराणां नराणां
त्वमेवासि नेता बलोपासकानाम् ।
भुभुःकारनादेन रक्षः समूहास्
त्वया नाशिता वानरेन्द्रेण सर्वे ॥ ६ ॥

दशास्यस्य कीर्तिं विनाशं नयन्तं
सुदीनाञ् जनांस्तारयन्तं कपीन्द्रम् ।
प्रभो रामचन्द्रस्य भक्तानवन्तं
हनूमन्तमेकं स्मरामि प्रभाते ॥ ७ ॥

अहङ्कारयुक्तश्च विद्यामदान्धः
सदा द्रव्यलुब्धोऽहमक्रोधहीनः ।
महामोहयुक्ते भवेऽस्मिन्निमग्नं
हनूमन् हताशं जनं पाहि नित्यम् ॥ ८ ॥

इमं संस्तवं रामदूतस्य रम्यं
पठेत् सादरं यो नरो भक्तियुक्तः ।
समस्तानि दुःखानि नीत्वा विनाशं
भवेत्तस्य वातात्मजः सौख्यदाता ॥ ९ ॥

इति श्री आपटीकरविरचितः श्रीहनूमत्संस्तवः सम्पूर्णः ।